"सुषुप्तिकाले सकले विलीने
तमोभिभूतः सुखरूपमेति" ॥

इत्यादिश्रुत्यन्तरग्रहः । तत्रैवानुभवमपि प्रमाणयति सुखमिति । न यं सुखपरामर्शी दुःखाभावविषयस्तस्य तत्राननुभूतत्वात्तदनुभवसाम-ग्र्यं निरूपयितुमशक्यत्वात् । विस्तृतं चैतद्वृद्धैरित्युपरम्यते सङ्ग्रहाधि-कारात् । उक्तोपाध्योस्तदुपहितयोश्च प्रागिसद्धवत्कृतमभेदं विशदयति अन-रिति । प्राज्ञेश्वरयोरभेदे श्रुतिं प्रमाणयति एष सर्वेश्वर इति । आदिपदात् "अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इत्यादिश्रुत्यन्तरग्रहः ॥ ८ ॥

प्राज्ञेश्वरात्मकस्य चैतन्यस्योपहितत्वेऽनुपहितं चैतन्यमन्यदेवेत्यर्थादुक्तेः तदित्यपेक्षायां तत्स्वरूपसञ्ज्ञे दर्शयति वन इति । आधारश्चासावनु-हितश्चासावाकाशश्च स तथा तद्वदिति यावत् । यद्यप्याकाशस्य वनाश्रयत्वं जलाशयाश्रयत्वं वा नास्ति तदनारम्भकत्वात्तथाप्यवकाशमन्तरेण तयोः स्थित्यनुपपत्तेस्तदाधारत्ववचनमिति द्रष्टव्यम् । अस्य चैतन्यस्य तुरीयत्वं वक्ष्यमाणविश्वाद्यपेक्षयेति द्रष्टव्यम् । तत्र प्रमाणमाह शिवमिति । आदिपदात्

"त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः" ॥

इत्यादिश्रुत्यन्तरग्रहः । अध्यारोपेण व्यासक्तचित्ततया प्रकरणार्थविस्मरणं मा भूदिति प्रसङ्गात्तमाह इदमेवेति ॥ ९ ॥

एवमवस्थाभिमानिसहितमज्ञानं सविभागं सप्रपञ्चं निरूप्येदानीं तत्कार्या-ध्यारोपं क्रमेण निरूपयिष्यंस्तदुपयोगित्वेनाज्ञानगतं सामर्थ्यं तावन्निरूपयति अस्याज्ञानस्य इति । तत्रावरणशक्तिं सदृष्टान्तामुपपादयति आवरणेति । यद्यप्यज्ञानस्य मूर्तत्वामूर्तत्वाभ्यामनिर्वाच्यत्वान्न परिच्छिन्नत्वं तथापि परि-च्छेद्यापेक्षयाल्पत्वमात्रं विवक्षितमिति दृष्टान्तदार्ष्टान्तिकयोरवैपम्यम् । बुद्धि-पिधायकतयेत्यत्र बुद्धिशब्देन तदनुरक्तं चैतन्यं लक्ष्यते बुद्धेरज्ञानकार्यत्वेन तदावृतत्वानुपपत्तेः । निरूपितेऽर्थे हस्तामलकाचार्यसम्मतिमाह तदुक्त-मित्यादिना । उक्तामावरणशक्तिं तत्कार्यद्वारा बुद्धिमारोहयति अनयेति । अधिष्ठानस्वरूपविशेषावरणवशेन विपरीतार्थसम्भावना भवतीत्यत्र दृष्टान्त-माह यथा स्वाज्ञानेति । विक्षेपशक्तिं सदृष्टान्तामाह विक्षेपेति । अत्राप्या-चार्यान्तरसम्मतिमाह तदुक्तं विक्षेपेति । आवरणविक्षेपशक्तिद्वयविशिष्ट-

---

१. *Kaivalya* 13. २. *Chhā.* 8. 3. 4. ३. *Kaivalya* 18.

मज्ञानं कूटस्थासङ्गाद्वयचैतन्यात्मनो जगत्कारणत्वोपाधिरिति । तदुक्तमभियुक्तैः ।

"आच्छाद्य विक्षिपति संस्फुरदात्मरूपं
जीवेश्वरत्वजगदाकृतिभिर्मृषैव ।
अज्ञानमावरविभ्रमशक्तियोगा-
दात्मत्वमात्रविषयाश्रयताबलेन" इति ॥ १ ॥

नन्वेवंविधाज्ञानोपाधिकस्येश्वरचैतन्यस्य यज्जगत्कारणत्वं तन्नि स्यादुपादानत्वं चोभयं चेति जिज्ञासायामाह शक्तिद्वयवत् इति । नतया कूटस्थचैतन्यस्वरूपावभासितया स्वोपाधिप्रधानतया उपादा त्तास्फूर्तिरूपतयेति भेदः । एकस्योभयविधकारणात्मकत्वे दृष्टान्तमाह लूतोर्णनाभिः । तन्तुरेव कार्यं तन्तुकार्यम् । यथा लूता तन्तु प्रसिद्धकार्पासतूलकाष्ठयन्त्रादिसहायमनपेक्ष्यैव तन्तूनातानविताना तत्कार्यं जालरूपं सृजत्येवमीश्वरः प्राक्सृष्टेरेक एवाद्वितीयोऽसहाय स्वमायाशक्त्यावेशमात्रेण लिङ्गादिब्रह्माण्डान्तं जगत्सृजेदिति भावः । च श्रुतिः । "यत्तदद्रेश्यमग्राह्यं" इत्युपक्रम्य

"यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात्केशलोमानि
तथाक्षरात्सम्भवतीह विश्वम्" ॥ इति ।

न्यायोऽपि । "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति ॥ ३ ॥

तदेवं चैतन्यस्य जगत्कारणत्वं प्रपञ्च्य ततः कार्योत्पत्तिक्रमं तमःप्रधान° इति । तमसः प्राधान्यनिर्देशाद्रजःसत्त्वयोरपि तत्र वृत्तिर्द्रष्टव्या । उक्तभूतसृष्टिक्रमे प्रमाणमाह तस्मादिति । न नोत्पद्यते निरवयवद्रव्यत्वादात्मवदिति चेन्न । उदाहृतश्रुतिबाधित नानुमानानुत्थानात्प्रत्यनुमानविरोधाच्च । तथा हि । आकाशमुत्पत्तिम सति भूतत्वान्महापृथिव्यादिवत् । न चाश्रयासिद्धो हेतुराश्रयस्य भयवादिसिद्धत्वात् । न च धर्मिग्राहकप्रमाणबाधनिबन्धनाप्यसिद्धि हेतोः । धर्मिग्राहकप्रमाणेन शब्दाश्रयत्वेनाकाशाख्यधर्मिमात्र तद्गतनित्यत्वादेस्तेनासिद्धेः । न च स्वरूपासिद्धो भूतत्वमहत्त्व सम्प्रतिपत्तेः । नापि व्याप्यत्वासिद्धो निरुपाधिकत्वात् । न च

१. *Saṅkshepas'ārīraka* i. 20. २. *Muṇḍ.* 1. 1. 6. 1. 1. 7. ३. *Brahmasūtra* 1. 4. 23.

[...]वत्वरूपवत्त्वादेरुपाधित्वं शक्यं गुणकर्मणोः साध्याव्याप्तेः । भूतत्वद्रव्यत्व-
मान्यवत्त्वादेश्च साधनव्यापकत्वात् । अथ द्रव्यत्वव्यतिरिक्तावान्तरजाति-
त्वमुपाधिरिति चेन्न प्रध्वंसेन साध्याव्याप्तेः । तस्योत्पत्तिमत्त्वेऽपि जात्या-
श्रत्वाभावात् । न च साध्यस्योत्पत्तिमत्त्वस्य भावधर्मिकत्वान्न प्रध्वंसे
[...]क्तिरिति वाच्यमुत्पत्तिमात्रस्यैवाकाशे साध्यत्वात् । अन्यथा विप्रतिपत्त्य-
पयाणां द्रव्यत्वादीनां धर्मिगतानां साध्यताप्रसङ्ग इत्यनुमानाकौशल-
पद्येत । न चान्यः कश्चिदुपाधिरुत्प्रेक्ष्यते । अविभुत्वं त्वाकाशेऽपि
[...]ान्तिनः समानं "ज्यायानन्तरिक्षात्" "येनावृतं खं च दिवं" इत्या-
[...]वात्मापेक्षयाकाशस्य न्यूनपरिमाणत्वश्रवणात् । अतो न तं प्रति तस्यो-
[...]धित्वम् । नापि विरुद्धः साध्यविपर्ययाव्याप्तेः । नापि साधारणानैकान्तिको
[...]क्षाप्रवेशात् । नाप्यसाधारणः सपक्षगामित्वात् । नापि कालातीतो
[...]धकप्रमाणानिरूपणात् । न चोक्तानुमानं बाधकमिति वाच्यं तस्य नर-
[...]ःकपालशुद्धतानुमानवदागमबाधितविषयत्वस्योक्तत्वात् । न च श्रुतेरा-
[...]शाभिव्यक्तिमात्रार्थत्वात्तोत्पत्त्यर्थतेति वाच्यम् । सिद्धे चानुमानस्याबा-
[...]तविषयत्वेन प्रामाण्ये श्रुतेरन्यार्थत्वसिद्धिस्तत्सिद्धावितरसिद्धिरितीतरेत-
[...]श्रयात् । किञ्च "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इति
[...]श्रुतः सम्भूतशब्द आकाशे साक्षात्सम्बध्यमानो गौणः स एव वाय्वा-
[...]ष्वनुषज्यमानो मुख्य इति महदिदं व्याख्यानकौशलं तार्किकपशोः ।
[...]पि सन्दिग्धानैकान्तिकता विपक्षव्यावृत्तेः स्फुटत्वात् । नापि प्रकरण-
[...]मता त्वदनुमानस्य दुर्बलत्वेनोभयोः समानबलत्वाभावात् । निरवयवद्र-
[...]व्यस्य विनश्यदवस्थापन्ने पटे व्यभिचारात् । अवयवत्वात्यन्ताभावाधि-
[...]णत्वं निरवयवशब्देन विवक्षितमिति चेन्न । अवयवशब्देन प्रदेशवि-
[...]क्षायां सर्वस्याप्यवयविप्रदेशस्यावयवत्वेनोपक्षीणत्वादवयव्यभावप्रसङ्गात् ।
[...]श्रयविवक्षायामन्यतरासिद्धो हेतुः स्यादाकाशाश्रयस्य ब्रह्मणो ममेष्टत्वात् ।
[...]मात्त्वदनुमानं न प्रतिपक्षः । नापि प्रतिपक्षान्तरमुत्प्रेक्ष्यते । तस्मा-
[...]दनुमानेनाप्याकाशोत्पत्तेः सम्भावितत्वाच्छुष्कतर्कश्रद्धामनादृत्य श्रुत्युक्तमे-
[...]काशजन्मेतरजन्मवच्छ्रद्धेयम् । अभ्युपगम्य चेदं परमाणूनामनुत्पत्ति-
[...]त्वं महत्त्वे सतीति हेतुर्विशेषितः । तदनभ्युपगमे तु भूतत्वादिरेव हेतुः ।
[...]रा हि चतुर्विधाः परमाणव उत्पद्यन्ते मूर्तत्वाद्भूतत्वाद्वा पटादिवत् ।
[...] च मनसि मूर्तत्वहेतोरनैकान्तिकता तस्यापि पक्षतुल्यत्वात् । न च

---

१. *Chhā.* 3. 14. 3.　२. *Mahānār.* 1. 3.　३. *Tait.* 2. 1.

४. See page 96, line 25.

धर्मिग्राहकप्रमाणबाधः सिद्धेऽपि तेन धर्मिस्वरूपे तद्गतनित्यत्वा
न च परमाणूनामपि कार्यत्वे कारणानवस्थानान्न किमपि मूलका
स्यादिति वाच्यं ब्रह्मण एव जगन्मूलकारणस्य श्रुतिस्मृतीतिहास
द्धत्वात् । तथा दिक्कालाद्युत्पत्तिमन्तावचेतनभावत्वात्पटवत् । न च
विद्यायां व्यभिचारस्तस्या भावाभावविलक्षणत्वाभ्युपगमात् ।
हेत्वाभासाः पूर्ववदुद्धरणीयाः । न च सामान्यविशेषसमवाये
चारस्तत्र सामान्यस्य विचार्यमाणे ब्रह्मस्वरूपानतिरेकादचेतनत्वा
प्रवृत्तेः । तथा हि विशेषास्तावत्सामान्ये कल्पिता इति स्वविवा
पितम् । तथा च द्रव्यत्वादीनां सामान्यविशेषाणां सामान्यमा
सत्तायामन्तर्भावः । सत्ताया अपि स्फुरणविरहितायाः काप्यनुप
रणमात्रत्वं युक्तम् । स्फुरणं च ब्रह्मैव "सदेव सौम्येदं" "
इत्यादिश्रुतेः । "ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद" इत्या
स्वरूपातिरिक्तत्वेन ब्राह्मण्यादिजातिं विजानतो निन्दाश्रवणाच्च
सामान्ये व्यभिचारः । विशेषसमवायौ तु खपुष्पकल्पौ ।
खपुष्पकल्पत्वं तथा चिदानन्दलहरीटीकायां प्रपञ्चितमस्माभि
ष्यते । श्रुतयश्च भवन्ति प्रत्यनुमानबाधिकाः । "अणोरणी
हि परमाणोरणीयः परमकारणं ब्रह्म दर्शयित्वा "यस्मात्परं
किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इति तैत्तिरीय
रिक्तमणुमहत्त्वाविशेषेण प्रतिषेधति । "असतोऽधि मनोऽसृ
स्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति च तैत्तिरीय
मनस उत्पत्तिं स्पष्टमाचक्षेते । तथा "ज्ञः कालकालो गुणी
"सर्वे निमेषा जज्ञिरे" इति च श्वेताश्वतरतैत्तिरीयश्रुती काल
तामावेदयतः । "पुरुष एवेदं सर्वं" इत्युपक्रम्य "दिशः श्रोत्र
पुरुषसूक्तात्मिका श्रुतिर्दिशां पुरुषविकारत्वं सूचयति । वस्तुत
दिग्व्यपदेशस्यादित्यगत्युपाधिना नभस्येव कल्पितत्वान्नाकाशातिरि
स्तीति गमयितव्यम् । न च ब्रह्माप्युत्पद्यते कारणत्वादाकाशव

---

१. *Chhā.* 6. 2. 1. २. *Tait.* 2. 1. 1. ३. *Brih.* 2. 4. 6
mentioned in any of our Catalogues. ५. So MNR
and margin of Q. प्रत्यक्षानुमान°. See Notes. ६. *Tait.*
10. 1. ७. *Idem.* 10. 10. 3. ८. *Tait. Brāh.* 2.
९. *Mund.* 2. 1. 3. १०. *S'vet.* 6. 2. ११. *Tait. Ar.*
१२. *Rik-saṁhitā* 10. 90. 2. १३. *Idem* 14.

...जो नित्य" इत्यादिश्रुतिविरोधात् "असम्भवस्तु सतोऽनुपपत्तेः" इति ...यविरोधाच्च । एतेन जगदुत्पत्तिप्राक्काले ब्रह्मातिरिक्तं वस्तु नास्तीति ...तम् । अविद्यायाश्चात्मशक्तित्वेन ततः पार्थग्भ्यायोगाज्जीवानां च तदा ...त्मनि सम्पन्नत्वात्तद्दृष्टानां च तदुपाध्यन्तःकरणनिष्ठानां तत्संस्कारा-...पाविद्यामात्रत्वेन पृथक्सत्त्वाभावात् । विस्तृतं चैतदाचार्यैर्वियदधिकर-...णाविति विश्रम्यते । "आकाशाद्वायुर्वायोरग्निः" इत्याद्यावाकाशादि-...समापन्नादविद्यासहायाद्ब्रह्मण एव वाय्वादीनामुत्पत्तिरिति द्रष्टव्यम् । ...त्तेजोऽसृजत तत्तेज ऐक्षत" इत्यादिश्रुत्यन्तरे तेजःप्रभृतेरपीक्षणपूर्वक-...ादिसृष्टत्वश्रवणात् । अचेतनस्य चेक्षणानुपपत्तेः । न्यायोऽपि "तद-...भ्यानादेव तु तल्लिङ्गात्सः" इतीममेवार्थं निर्णयति । एतेन प्रधानाण्वा-...दा निरस्ता वेदितव्यास्तेषां श्रुतिविरुद्धत्वान्न्यायविरुद्धत्वाच्च । न ह्यचेतनं ...नानधिष्ठितं किञ्चित्कुर्वदुपपद्यते रथशकटादावदर्शनात् । अतो न प्रधान-...द आश्रयणीयः । तथा परमाणुवादोऽपि । अण्वोर्द्वयोः संयोगस्याव्या-...वृत्तित्वे तयोः सावयवतापत्तेरनित्यत्वप्रसङ्गः । तत्संयोगस्य व्याप्यवृत्तित्वे ...वयवयोरण्वोरेकस्मिन्नितरस्य सम्मितत्वात्प्रथिमानुपपत्तिस्तथा च तत्का-...य द्व्यणुकस्यापि परिमण्डलत्वप्रसङ्गः । किञ्च द्व्यणुकारम्भसमये परमाणू ...ञ्चिद्विक्रियेते न वा । आद्येऽनित्यत्वादिदोषापत्तिर्मृत्पिण्डादिवत् । द्वितीये ...माणुसमूह एव द्व्यणुकादिकार्यं स्यात्तृणतूलवत् । इत्यलं प्रपञ्चेन प्रकृत-...नुसरामः ॥

तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितं चैतन्यमाकाशादिकारणमित्युक्तं कथमवगम्यते भूतकारणाज्ञाने तमःप्राधान्यमिति तत्राह तेषु च इति । ...ड्याधिक्यदर्शनात् इत्यत्राधिक्यशब्दं प्रयुञ्जानः सत्तास्फूर्तिपदत्वेन ...येषु चैतन्यस्यापीषदनुवृत्तिं सूचयति । तथा चाहुस्तत्त्वदर्शिनः ।

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्" ॥ इति ।

वसिष्ठोऽप्याह ।

"यदस्ति यद्भाति तदात्मरूपं
नान्यत्ततो भाति न चान्यदस्ति ।
स्वभावसंवित्प्रतिभाति केवला
ग्राह्यं गृहीतेति मृषा विकल्पः" ॥ इति ।

---

१. *Katha*, 2. 18. २ *Brahmasūtra* 2. 3. 9. ३. *Tait.* 2. 1. ४. *Chhā.* 6. 2. 3. ५. *Brahmasūtra* 2. 3. 13. ६. See Notes. ... *Idem* 2. 1. 29. ८. *Vākyasudhā* 20. ९. See Notes.

उत्पद्यमानेष्वाकाशादिषु वक्ष्यमाणकार्यानुरूपं गुणत्रयमुपलभ्यन्तेपेय
नीमिति । कारणस्याव्याकृतस्य ये गुणाः सत्त्वादयस्तेषां प्रक्रमेण तत्सदृश
नारभ्य यथाकार्यक्रमं सत्त्वादिगुणः सहैव कार्यैस्तेषूत्पद्यन्त इत्यर्थः ह्युक्त
व्याकृतात्पञ्चतन्मात्राणि क्रमेण जायन्त इति हि स्मृतीतिहासपुराणादि
द्धिस्तत्कथमाकाशादेरिहोत्पत्तिराम्नायत इति तत्राह एतान्येवेति । एते
वाकाशादीनि सूक्ष्मभूतानि व्यवहाराक्षमाणि तन्मात्राणि शब्दादिरूप
त्रैकस्वभावान्यपञ्चीकृतानि परस्परमसंसृष्टानि चेति स्मृत्यादिपूच्यन्ते तः
भिरित्यर्थः । तदेवं भूताध्यारोपं श्रौतमनुक्रम्येदानीं भौतिकाध्यारोप्यः
जानीते एतेभ्य इति ॥ १२ ॥

प्रतिज्ञातैकदेशं विवृणोति सूक्ष्मशरीराणि इति । लिङ्ग्यते
प्रत्यगात्मसद्भाव एभिरिति लिङ्गानि तानि च तानि शरीराणि
प्रतिष्ठत्वाच्छरीरसाधनत्वाद्वा धर्मादिद्वारेणेति लिङ्गशरीराणीत्यर्थः
च प्रयोगः । "विमतानीन्द्रियाणि प्राणश्च स्वातिरिक्तस्वानुगतचेतन
पूर्वकप्रवृत्तयोऽचेतनत्वाद्रथादिवत्" इति । श्रुतिश्च भवति ।
प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः" इ
येदं जिघ्राणीति स आत्मा गन्धाय घ्राणं" इत्यादिका च ।
सप्तदशावयवा इति तानाह अवयवास्तु इति । ननु कथं
सप्तदशावयवमिति निर्धार्यते । यावता पुर्यष्टकं लिङ्गमाचक्षते सुरे
पञ्चीकरणवार्तिके ।

"ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ।
मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् ॥
प्राणोऽपानस्तथा व्यान उदानाख्यस्तथैव च ।
समानश्चेति पञ्चैताः कीर्तिताः प्राणवृत्तयः ॥
खं वाय्वग्न्यब्धरित्र्यश्च भूतसूक्ष्माणि पञ्च च ।
अविद्याकामकर्माणि लिङ्गं पुर्यष्टकं विदुः" ॥ इति ।

अन्यत्र पुनरन्यादृशं वर्णितम् । भूतसूक्ष्मपञ्चकं कर्मज्ञानेन्द्रि
द्वयं चतुर्वृत्तिकमेकमन्तःकरणं पञ्चवृत्तिक एकः प्राणश्चेति सप्त
इति । अतः कथं निर्णय इति । उच्यते । न चैतेषां पक्षाणां वि

१. *Brih.* 4. 4. 18. २. *Chhā.* 8. 12. 4. ३. See
४. According to MS. 243 of 1882-83 in Deccan C
Library, this consists of the second line of verse 31, the
verse 33, and verses 35 and 36. See Notes. ५ See N

मभ्युपेयते वस्तुनि तद्योगान्नापि समुच्चयस्तत्र प्रमाणाभावात्किन्त्विहोक्तस्य सप्तदशकस्यैव संक्षेपविस्तरभेदेन तथा तथा तत्र तत्र कथनम्। तथाहि। यः होक्तानां हि सप्तदशानामवयवानां भूतसूक्ष्माण्युपादानानि तदुपादानं दार्थाविद्या । अतश्चोपादानोपादेययोरभेदान्नाविद्या भूतसूक्ष्मेभ्यः पृथग्विव-ते। एते । भूतसूक्ष्माणि च लिङ्गशरीरेभ्यो न पृथगभिप्रेयन्ते। कामकर्म-द्यादीन्यप्यन्तःकरणवृत्तित्वेन तदाश्रितत्वेन च तदभेदान्न पार्थग्ग्यविवक्षा। त्यतः पुर्यष्टकवार्तिकेन न विरोधः। तथा पक्षान्तरेऽपि भूतसूक्ष्माणि तत्का-र्येभ्यः पृथक्कृत्वान्तःकरणप्राणयोश्च वृत्तिवृत्तिमतोरभेदं गृहीत्वा सप्तदशत्वं रूपितम्। तथा च "सप्तदशः प्रजापतिः" इति श्रुतेः प्रजापतेर्हिरण्य-र्भस्य सप्तदशत्वावगमात्सप्तदशावयवमेव लिङ्गशरीरं मुख्यं ज्ञेयमिति। दुक्तमभियुक्तैः।

"मुख्यं तु सप्तदशकं प्रथितं हि लिङ्गम्" ॥ इति।

ज्ञानसाधनानीन्द्रियाणि ज्ञानेन्द्रियाणि श्रोत्रादीनि। तेषां शब्द-र्शरूपरसगन्धग्राहकेन्द्रियत्वानि प्रत्येकं यथाक्रमं लक्षणानि। इन्द्रिया-ग्याहङ्कारिकाणीति सांख्यास्तान्निराकुर्वंस्तेषां भौतिकत्वं कथयति एतानीति। रणगुणेनोत्पन्नत्रिगुणानां भूतानां सत्त्वगुणावच्छिन्नेभ्योंऽशेभ्यो गुणोद्रेक-स्वभागेभ्यः श्रोत्रादीनि जातानीत्यर्थः। बुद्धिमनसी लक्षयति बुद्धिर्नाम ति। निश्चयोऽध्यवसायः। इदमित्थमेवेति विषयपरिच्छेदः। सङ्कल्प इदं लमिदं पीतमिति विषयविवेचनम्। विकल्पस्तद्विपर्यय इति भेदः। न्यन्तःकरणस्य चतुष्टयत्वप्रसिद्धेः कथमिह द्वयमेव गृहीतमित्यत आह नयोरेवेति। अनुसन्धानात्मिकान्तःकरणवृत्तिश्चित्तम्। अभिमानात्मि-कान्तःकरणवृत्तिरहङ्कारः। चित्तस्य बुद्धावन्तर्भावो विषयपरिच्छित्तिरूपत्वा-विशेषात्। अहङ्कारस्य मनस्यन्तर्भावस्तस्यापि सङ्कल्पात्मकत्वाविशेषात्। एवं स्वरूपाभेदेऽपि विषयभेदात्क्वचित्क्वचिच्चित्ताहङ्कारयोर्बुद्धिमनोभ्यां पृथ-ग्निर्देशः। बुद्धेरपूर्वो विषयश्चित्तस्य पूर्वानुभूतः। तथा मनसो बाह्य आभ्यन्तरश्च सर्वो विषयो यथायोगमहङ्कारस्य त्वनात्मोपरक्त आत्मैवेति। अतो विषयभेदेऽपि स्वरूपाभेदाद्युक्तोऽन्तर्भावः॥

पूर्ववदेषां चतुर्णामप्यन्तःकरणभेदानां भौतिकत्वमाह एते पुनः इति। उक्तानां ज्ञानेन्द्रियाणामन्तःकरणानां च भूतगतसात्त्विकांशकार्यत्वे हेतुमाह तेषां प्रकाशात्मकत्वादिति।

"तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्"।

---

१. *S'atapatha* 5. 2. 2. 3. २. *Sankṣepas'ārīraka*. iii. 10. ३. See Notes. ४. *Gītā* xiv 6.

इति स्मृतेः । सत्त्वकार्यभूतः प्रकाश इन्द्रियान्तःकरणेपूपलभ्यत इति
सत्त्वकार्यतां गमयतीत्यर्थः । निरूप्यमाणे लिङ्गशरीर उक्तेरवान्तर
मवान्तरभेदं कथयति इयं बुद्धिः इति । बुद्धिग्रहणेनार्थान्मनोभेदः
भिप्रेता । तदुपहितचैतन्यस्य च व्यपदेशभेदमाह अयमिति । अयमा
मयकोशावच्छिन्नश्चिदात्मा जीव इत्युच्यत इत्यन्वयः । तस्य प्रप
विशेषमाह व्यावहारिक इति । व्यवहारमेव विशेषणान्तरेण
इहलोकेति । तत्र हेतुमाह कर्तृत्वेति । तथा च श्रुतिः ।

"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च"। इति ।

कर्तृत्वादिकं चैतन्यात्मनो न वास्तवं किंत्वाभिमानिकमित्यभि
मानित्वेनेत्युक्तम् । तथा च श्रुतिः । "स समानः सन्नुभौ लोकावनुसञ्चरति
ध्यायतीव लेलायतीव" इत्याद्या । इवशब्देन व्यवहारस्याभासत्वं
तथा न्यायौ च "कर्ता शास्त्रार्थवत्त्वात्" "यथा च तक्षोभयथा" इत्येते
कर्तृत्वाकर्तृत्वयोर्व्यावहारिकपारमार्थिकत्वे व्यवस्थापयतः । पूर्ववत्
त्त्वमवान्तरभेदमाह मनस्तु इति । कर्मसाधनानीन्द्रियाणि कर्मेन्द्रि
तानि विभजते कर्मेन्द्रियाणि इति । वचनादानगमनविसर्गा
नेन्द्रियत्वं यथाक्रमं वागादीनां प्रत्येकं लक्षणम् । एतेषामपि पूर्ववद्रजो
कत्वमाह एतानि पुनरिति ॥

ननु कथमिन्द्रियाणां भौतिकत्वं निर्दिश्यते यत एषां भूतवत्
कारणादेवोत्पत्तिः श्रूयते "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च"
इति । सत्यं श्रूयते । तत्रार्थक्रममेवाश्रित्य भूतभावमापन्नात्
रिन्द्रियोत्पत्तिराश्रिता । तथा च न्यायः । "अन्तरा विज्ञानमनसी क्रमेण
तल्लिङ्गादिति चेन्नाविशेषात्" इति । न चैतेषां भौतिकत्वे प्रमाणा
"अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्" इति श्रुतेः
प्रमाणत्वात् । न च वागादिष्विन्द्रियत्वमप्रसिद्धमिति वाच्यं "प्र
समारुह्य वाचा हि सर्वाणि नामान्याप्नोति" इति कौषीतकयादौ
दिभिः सह वाचः समभिव्याहृतत्वात् । आथर्वणे च "चक्षुश्च
इत्यादिना सविषयाणीन्द्रियाण्यनुक्रम्य "हस्तौ चादातव्यं चोपस्थ
यितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च" इति
समभिव्याहृतत्वात् । एतानि चेन्द्रियाण्येकादशैव भवन्ति न

१. *Tait.* 2. 5. 1. २. *Bṛih.* 4. 3. 7. ३. *Brahmasū*
33, 40. ४. *Muṇḍ* 2. 1. 3. ५. *Brahmasūtra* 2.
६. *Chhā.* 6. 5. 4. ७. *Kaush.* 3. 6. ८. *Pras'na* 4. 8.

धिकानि "दशेमे पुरुषे प्राणा आत्मैकादशः" इति श्रुत्यनुरोधेन सिद्धान्ततत्वात्। अत्रात्मशब्दो मनोविषयः प्राणशब्द इतरेन्द्रियविषय इति भेदः। अणुत्वं चैषां परिच्छिन्नत्वे सति सूक्ष्मत्वलक्षणमभ्युपगन्तव्यं न तु परमाणुलक्षणत्वम्। तथा सति सर्वशरीरव्यापिकार्यानुपपत्तिप्रसङ्गात्। अपरिच्छिन्नत्वे चोत्क्रान्तिगत्यागतिश्रुतिव्याकोपप्रसङ्गः। स्थूलत्वे चोत्क्रान्तिसमये बिलान्निर्गच्छन्त इव सर्पाः शरीरच्छिद्रेभ्यो निष्क्रममाणानीन्द्रियाणि प्रत्यक्षेणोपलभ्येरन्। न चोपलभ्यन्ते। तस्मादुक्तप्रकारेणाणूनीन्द्रियाणि। ननु "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इत्यादिश्रुतेरग्न्यादिदेवतानामेव मुखादिस्थानेषु वागादीन्द्रियात्मना प्रवेशश्रवणात्कथमेतेषां भौतिकत्वमुच्यत इति चेन्नैष दोषः। देवतानामप्याधिदैविकप्राणात्मनां भौतिकदेहविशिष्टचेतनानामैश्वर्ययोगादध्यात्मं वागादिरूपेण मुखादिष्ववस्थानस्य स्यात्। तथा च भौतिकान्यपीन्द्रियाणि देवताशरीराणि चेति न विरुध्यन्ते। यद्वा इन्द्रियाण्युक्तलक्षणानि भौतिकान्येव देवतानां पुनस्तदधिष्ठातृत्वेन तच्छरीरतया तत्र प्रवेश एव "अग्निर्वाग्भूत्वा" इत्यादावाम्नायत इति। तथा च न्यायः। "ज्योतिराद्यधिष्ठानं तु तदामननात्" इति। लिङ्गं "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" इति तेजोमात्राणामिन्द्रियाणामुत्क्रान्तिसमये हृदयप्रवेशमुक्त्वा "स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवति" इत्यादित्यपुरुषस्य चक्षुषोऽपक्रमणं दर्शयति। ये पुनर्मुख्यप्राणस्य वृत्तिभेदा वागादय इति वदन्ति तेऽप्यनयैव नीत्या निराकरणीयाः। "ते ह वाचमूचुस्त्वं न उद्गाय" इत्युपक्रम्यासुरपाप्मविद्धत्वेन वागादीननुद्गातृन्निर्धार्य समाप्य च वागादिप्रकरणं "अथ हेममासन्यं प्राणमूचुः" इति पृथगेव मुख्यप्राणस्य निर्देशात्। तथा सुषुप्तावपि वागादीनामुपसंहारो मुख्यप्राणस्य सवृत्तिकस्यास्ति जागरणमिति वैषम्यलिङ्गाच्च प्राणादिन्द्रियाणां भेदः। एवमादिन्यायकलापो द्वितीयेऽध्याये चतुर्थे पादे विस्तृतः। इह पुनर्वेदान्तसारस्याङ्गन्थस्य वेदान्तविहिता न्याया लेशतो दर्शिता इति। तस्मादुक्तमिन्द्रियाणां भौतिकत्वादीति स्थितम्॥

इदानीं वायुपञ्चकं विभजते वायव इति। प्राग्गमनवान्नाग्रस्थो निःसरणम्। यद्यपि "प्राणो हृदये" इतिश्रुतेर्हृदि प्राण इत्यभिधानाच्च हृदयस्थानः

१. *Brih.* 3. 9. 4. २. See Notes. ३. Ditto. ४. *Ait.* 2. 4. ५. *Brahmasūtra* 2. 4. 15. ६. *Brih.* 4. 4. 1. ७. *Idem.* ८. *Idem.* 1. 3. 3. ९. *Idem.* 1. 3. 6. १०. *Tait. Brāhmaṇa* 3. 10. 8. 5. ११. See Notes.

प्राणस्तथापि नासाग्रे प्रत्यक्षमुपलभ्यमानत्वान्नासाग्रस्थानवर्तीत्युक्त
नाभेरधस्ताद्गमनवान्मलापनयनव्यापारेण । पायुर्गुदं तत्स्थानवर्
आदिशब्दादुपस्थग्रहः । तत्रापि मूत्ररेतोविसर्गस्यापानकर्मत्वात्
व्यपरितः सर्वतो गमनं विद्यते यस्य स तथा । प्राणापाननियमनक
मग्न्युत्पादनादिवीर्यवत्कर्महेतुत्वादखिलशरीरवर्ती व्यान इत्यर्थः ।
श्रुतिः । "अथ यः प्राणापानयोः सन्धिः स व्यान" इत्युपक्रम्य "
न्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि
इति । यद्यपि "चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य"
त्क्रमणस्य चक्षुरादिद्वारेष्वनियमस्तथापि कण्ठसम्बन्धस्य प्रायेण
त्वात्कण्ठस्थानवर्त्युदान इत्युक्तम् । अशितादेः समं नयनात्समान

मतान्तरमुत्थापयति स्वमतपरिशुद्धये केचित्तु इति । ते
न्याह नाग इत्यादिना । उद्गिरणं छर्दिः । उन्मीलनशब्दो निमी
पलक्षणपरः । पोषणं पुष्टिः । अन्यत्प्रसिद्धम् । उत्थापितं मतं
एतेषामिति । केचिच्छब्द औपनिषदविषयः । एतेषां नागादी
दिष्वन्तर्भावादित्ययमर्थः । उद्गिरणं ह्यूर्ध्वमुखस्य वायोः क्रिया ।
वायुरुदान इत्युक्तम् । तथा चोदानेनैवोद्गिरणस्यापि सिद्धौ नाग
रुदानेऽन्तर्भावान्न ततः पृथक्त्वम् । उन्मीलनस्याङ्गचेष्टान्तर्गत
व्याननिमित्तकत्वादुन्मीलनकर्तुः कूर्मस्य व्यानेऽन्तर्भावः । सम
पीतादीनां पाकेन रसादिभावमापद्य सकलशरीरदेशेषु तत्प्रवेशने
क्षुधोत्पत्तेस्तत्कर्तुः कृकलस्य समानेऽन्तर्भावः । जृम्भणस्य नि
हेतुकत्वान्निद्रालस्यादेश्च वातुलाद्यन्नोपजीवननिमित्तकत्वाद
चापानकर्मत्वादपान एव परम्परया जृम्भणहेतोर्देवदत्तस्यान्तर्भावः
नास्यस्यान्तर्मुखतया शरीरान्तः प्रविशतो वायोरन्नस्वीकरणहेतु
समाम्नायते "तदपानेनाजिघृक्षत्तदावयत्" इति । रसलोहितमांस
शरीरेऽन्नपरिणामे सत्येव पोषणापरपर्यायाः पुष्टेः सम्भवाद्रसादि
समाने धनञ्जयस्यान्तर्भाव इति । तथा च प्राणादीनामेव
मुद्गारादिक्रियानिमित्ततयावस्थान्तरमापद्यमानानां नागादिसंज्ञाया
पत्तौ तत्त्वान्तरकल्पनं तेषां गौरवमप्रामाणिकमिति भावः । श्रुतौ
नामेव प्राणादीनां तत्र तत्र श्रवणात्तद्विरुद्धा चेयं कल्पना । प्र
मुख्यस्यैकस्य प्राणस्य वृत्तिविशेषा एव न तत्त्वान्तरभूताः । "प्रा
व्यान उदानः समानोऽन" इति बृहदारण्यके वृत्तिमतः प्राणस्य

---

१. *Chhā.* 1. 3. 3. २. *Idem.* 1. 3. 5. ३. *Brih.*
४. *Ait.* 3. 10. ५. *Brih.* 1. 5. 3.

...गानशब्दवाच्यस्य पृथङ्निर्देशात्। तथा च न्यायः "पञ्चवृत्तिर्मनोवद्व्यपदेशात्" इति। तथा मुख्यप्राणोऽपि वायोर्बाह्यस्य सूत्रात्मरूपस्य विकारो न ...रीरमध्ये नभोवद्वृत्तिलाभमात्रेणावस्थितो बाह्यवायुरेव। नापि वागादीनां ...सामान्यवृत्तिरूपा वा क्रिया। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि ...। खं वायुः" इतिश्रुतौ वायोरिन्द्रियाणां च प्राणात्पृथगेव निर्दिष्टत्वात्। ...था च न्यायः। "न वायुक्रिये पृथगुपदेशात्" इति। "अणुश्च" ...त्यादिन्यायवशादिन्द्रियवत्सूक्ष्मत्वादिकमपि प्राणस्यानुसन्धेयमिति सङ्ग्रहः।

प्राणादीनामपि पूर्ववदुपादानविशेषं सङ्कीर्तयति एतत् इति। उक्ता...मेव कर्मेन्द्रियाणां प्राणादिभिर्मिलितानां पूर्ववदवान्तरविशेषमाह इदं ...णादीति। प्राणादिपञ्चकस्य रजोंशकार्यत्वे लिङ्गमाह अस्येति। उक्तं ...शत्रयमनूद्य तेषां प्रतिनियतां व्यवस्थां दर्शयति एतेषु कोशेषु इत्या...ना। "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इतिश्रुतेर्वि...नस्य चैतन्यं प्रत्यतिसन्निहितत्वाज्ज्ञानशक्तिमत्त्वम्। "कामः सङ्कल्पो...चिकित्सा" इत्यादिश्रुतेः कामापरपर्यायाया इच्छाया मनोवृत्तित्वाव...रणादिच्छाशक्तिमत्त्वं मनोमयकोशस्य। "स यथा प्रयोग्य आचरणे युक्त ...वमेवायमस्मिञ्छरीरे प्राणो युक्तः" "कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भवि...ष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति" "स प्राणमसृजत" इत्यादि...श्रुतेः प्राणमयकोशस्य क्रियाशक्तिमत्त्वम्। योग्यत्वात् इत्यस्यायमर्थः। ...ज्ञानमयस्य तु कर्तृत्वमुपपादितं मनोमयस्य करणत्वं विवेकसाधनत्वात्। ...त्मेन्द्रियविषयाणां सन्निकर्षे विद्यमानेऽपि यदन्वयव्यतिरेकाभ्यां ज्ञान...याभावौ तन्मनोविवेकसाधनत्वात्करणपक्षपातीति युक्तं मनोमयस्य करण...त्वम्। तथा च श्रुतिः। "अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं ...श्रौषं" इति। "तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति" इति च। ...यश्च भवति। "नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा" ...ति। तथा "तौ मिथुनं समैतां ततः प्राणोऽजायत" इतिश्रुतेः प्राणस्य वाङ्म...नसयोर्मिथुनीभूतयोरुत्पत्तिश्रवणात्प्राणमयस्य कार्यरूपत्वं युक्तमिति। एवं ...मेव ...क्ष्मशरीरस्यावयवान्तरविशेषान्निरूप्यावयविनं निर्दिशति एतत्कोशेनेति॥१३॥

"लिङ्गं मनो यत्र निषक्तमस्य" "अनन्तं वै मनोऽनन्ता विश्वेदेवाः"

---

१. *Brahmasūtra* 2. 4. 12. २. *Muṇḍ.* 2. 1. 3. ३. *Brahmasūtra* 2. 4. 9. ४. *Idem* 2. 4. 13. ५. *Bṛih.* 4. 3. 7. ६. *Idem.* 5. 3. ७. *Chhā.* 8. 12. 3. ८. *Pras'na.* 6. 3. ९. *Idem.* 4. १०. *Bṛih.* 1. 5. 3. ११. *Idem.* १२. *Brahmasūtra* 2. 3. 32. १३. *Bṛih.* 1. 5. 12. १४. *Idem.* 4. 4. 6. १५. *Idem.* 3. 1. 9.

इत्यादिश्रुतिषु लिङ्गशरीरस्याप्येकत्वबहुत्वश्रवणात्तदेकत्वानेकत्वयोः
वदेव व्यवस्थेत्यभिप्रेत्याह अखिलसूक्ष्म° इति । अनयोस्तु व्यति
रेकत्वं स्पष्टमेव पठ्यते । "वायुरेव व्यष्टिर्वायुः समष्टिः" इति बृहद
समष्टिलिङ्गशरीराभिमानिनश्चैतन्यस्य व्यवहारसिद्धान् व्यपदेशान्
एतत्समष्टीति । व्यपदेशत्रये निमित्तमाह सर्वत्रेत्यादिना । सं
तत्वात्सूत्रात्मा । ज्ञानशक्तिमदन्तःकरणोपहितत्वाद्धिरण्यगर्भः । क्रि
मदधिदैवतप्राणरूपत्वात्प्राणस्तादृगध्यात्मप्राणरूपत्वाद्वा । यद्वा ज्ञ
शक्तिमत्समष्टिप्राणेन्द्रियसमुदायात्मकं समष्टिलिङ्गशरीरं तदुपहितं
शक्तिप्राधान्येन हिरण्यगर्भः क्रियाशक्तिप्राधान्येन प्राण इति च
इति योजना । तथा च श्रुतिवचनानि । "वायुर्वै गौतम तत्सूत्रं वा
गौतम सूत्रेण" इति । "हिरण्यगर्भः समवर्तताग्रे" "
जनयामास पूर्वं" इति । "कतम एको देव इति प्राण इति" चैव
प्राण इति चोच्यते इति चशब्दात्कः प्रजापतिर्ब्रह्मेत्यादिव्यपदे
समुच्चीयन्ते । एवमुपहितस्य व्यपदेशभेदानुक्त्वोपाधेरपि तानाह
त्यादिना । स्थूलप्रपञ्चो विराड्विज्ञानमयादिकोशत्रयं लिङ्गशरीरं सू
मिति सम्बन्धः । मध्यप्रदीपन्यायेनोत्तरत्रापि जाग्रद्वासनेत्यत्र 
सम्बध्यते । वासनामयत्वं चास्य श्रुतिराह "तस्य हैतस्य पुरुषस्य 
माहारजतं वासो यथा पाण्ड्वाविकं" इत्यादि "सकृद्विद्युत्तं" इ
स्वप्नत्वं चास्याव्याकृतविराजोः सन्ध्यस्थानत्वादुपपन्नं "सन्ध्यं तृ
स्थानं" इति श्रुतेरविशेषात् । यतो वासनामयोऽत एवेति योजना ।
लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य" इत्याद्या "स्वप्नेन 
मभिप्रहत्य" इत्याद्या च श्रुतिः स्थूलशरीरस्य स्वप्ने लयं दर्शयन्ती 
महाप्रपञ्चस्यापि सन्धौ तं सूचयन्ति । एवं समष्टिलिङ्गतदुपहितचैतन्य
देशानुक्त्वा व्यष्टिलिङ्गतदुपहितचैतन्ययोरपि तानाह एतदिति ।
व्यपदेश्यत्वे हेतुमाह तेजोमया° इति । तेजोमयत्वं वासनामयत्वं
निर्माय स्वेन भासा" इति श्रुतौ भाःशब्देनान्तःकरणस्य 

---

१. *Brih.* 3. 3. 2. २. *Idem.* 3. 7. 2. ३. *Rik-saṁ*
121. 1. ४. *S'vet.* 3. 4. ५. *Brih.* 3. 9. 9. ६. "After th
ner of a lamp placed in the middle of a door ( and th
light both inwards and outwards )." P. Occurs in B
on *Mund.* 1. 1. 3. See Notes. ७. *Brih.* 2. 3. 6
MNPQ. ९. *Brih.* 4. 3. 9. १०. *Idem.* ११. *Idem.*
१२. *Idem.* 4. 3. 9.

ख्यातत्वात् । अस्यापीति । स्पष्टार्थः "यो वै प्राणः स वायुः" इति-
तेः । समष्टिव्यष्टिलिङ्गयोस्तदवस्थयोरपि सन्ध्ययोरभेदं सिद्धवत्कृत्य तत्र
जससूत्रयोर्भोगविशेषं निर्दिशति एताविति । तदानीं स्वप्नावस्थायाम् ।
द्रादिदोषदूषितस्यादृष्टादिसमुद्बोधितसंस्कारविशेषसचिवस्यान्तःकरणस्य याः
स्कारानुरूपा वृत्तयस्तादृगन्तःकरणसंसृष्टचैतन्यस्थाविद्याशक्तिविजृम्भित-
षयाकारास्ताभिः सूक्ष्मविषयान् जाग्रद्वासनामयानीषदस्फुटाननुभवत
त्यर्थः ॥

न स्वप्नः स्मृतिरपरोक्षावभासितत्वात् नापि प्रत्यक्षप्रमा सम्प्रयोगाद्य-
भावात् । न च सुषुप्तिः स्पष्टं विषयानुभवात् । नापि जागरितं तदुचित-
देशकालनिमित्तानामसम्भवात् । तथा हि "यथा केशः सहस्रधा भिन्नः"
इत्यादिना केशसहस्रांशैर्नाडीरुपमीय "एताभिर्वा एतदास्रवति" इति-
क्रमाय तादृशनाडीप्रवेशं दर्शयति श्रुतिः । तथा चातिसूक्ष्मासु नाडीषु
स्वप्नं पश्यतो न नदीसमुद्रवनगिरिनगरीनिवेशोचितो देशोऽस्ति येन तत्र
स्थितान्नद्यादीन्पश्येत् । ननु "बहिः कुलायादमृतश्चरित्वा" इति श्रुतेर्बहि-
श्च स्वप्नान्पश्यतीति चेन्न तत्र बहिःशब्देन स्थूलशरीरोपरागाभावमात्रस्य
विवक्षितत्वात् । अन्यथा तस्मिन्नेव शरीरे नियमेन पुनर्जागरणानुपपत्तेः ।
तथा च श्रुत्यन्तरं "कुरुष्वहमद्य शयानो निद्राभिप्लुतः स्वप्ने पञ्चालानधि-
गतश्चास्मिन्प्रतिबुद्धश्च" इति स्वप्नप्राप्तदेशान्तरात्पुनरागमनरहितस्यापि
स्वप्नदेशस्थशरीरे जागरणं दर्शयति । अतो न तत्र जाग्रदुचितो देशः । नापि
कालस्तदुचितः सम्भवति मुहूर्तमात्रेऽपि संवत्सरशतानामनुभवात् । नाप्यु-
चितं निमित्तं तत्र सम्भवति तक्षदारुमृदाद्यभावेऽप्यकस्मादेव प्रासादादे-
र्निष्पत्तिदर्शनात् । जाग्रदवस्थापन्नानां वस्तूनां स्वप्नेऽभावं दर्शयित्वा
नूतनानां वासनात्मकानां निर्माणं दर्शयति श्रुतिः "न तत्र रथा न रथयोगा
न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजते" इत्यादिना । तस्मान्मा-
यामय एव स्वप्न इति द्रष्टव्यम् । तथा च न्यायः । "मायामात्रं तु कार्त्स्न्ये-
नानभिव्यक्तस्वरूपत्वात्" इति ॥

उक्तेऽर्थे प्रमाणमाह प्रविविक्तभुक् इति । आदिशब्दात् "तस्मादेष
प्रविविक्ताहारतर इवैव भवति" इत्यादिश्रुत्यन्तरग्रहः । अत्रापीति स्पष्टार्थः ।
सूक्ष्मशरीरप्रपञ्चनमुपसंहरति एवमिति ॥ १४ ॥

---

१. *Brih.* 3. 1. 5. ( योऽयं ). २. *Idem.* 4. 2. 3. ३. *Idem.* ४. *Idem.* 4. 3. 12. ५. See Notes. ६. *Brih.* 4. 3. 10. ७. *Brahmasūtra* 3. 2. 3. ८. *Brih.* 4. 2. 3.

पूर्वत्र प्रतिज्ञातानि स्थूलभूतानि प्रपञ्चयति स्थूल° इति । नामेव भूतानां परस्परं व्यवहर्तृप्राणिनिकायव्यवहारनिर्वाहकत्वं धर्मापेक्षपरमेश्वरसान्निध्यादिनिमित्तापेक्षया विभागेन मिलितानामेव तापत्तिः पञ्चीकरणमित्याह पञ्चीकरणं तु इति । ननु कथमिदं सम्य पञ्चीकरणं निरूप्यते तत्र प्रमाणाभावादित्याशङ्क्याह अस्येति । देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नाम व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इतीश्रुते सदाख्या परमात्मदेवता सृष्टानां तिसृणां देवतानां तेजोबन्नात्मिकानां एकैकां देवतां त्रिवृतं त्रिवृतं त्रिरूपां त्रिरूपामकरोत्कृतवतीति श्रुतिः । सा पञ्चीकरणमप्युपलक्षयत्याक्षिपतीत्यर्थः । त्रिवृत्करणं तेजोबन्नानां त्रयाणां मध्य एकैकं द्विधा समं विभज्य पुनरेकैकभाग विभागं कृत्वा स्वस्वद्वितीयं स्थूलभागं परित्यज्यान्यदीयस्थूलभाग भागस्य संयोजनम् ।

अत्र केचित्प्रगल्भन्ते सम्प्रदायाध्वना पञ्चीकरणं यद्यपि स्थितं युक्तिदुष्टत्वाद्वाचस्पतिमतं शुभमित्यादिना । तत्र युक्तिं चेत्थमाचक्ष पवनयोः किल पृथिव्याद्यात्मत्वे रूपवत्त्वमहत्त्वाभ्यां चाक्षुष प्रसज्येतेति । तत्र त्रिवृत्करणपक्षेऽपि तेजसः पृथिव्यात्मत्वे त्वाभ्यां विशिष्टतयोपलम्भप्रसङ्ग इति दोषसाम्ये शङ्कितेऽर्द्धभूयस्त्व इति परिहारस्य पञ्चीकरणपक्षेऽपि समानत्वेन दूषणोद्धारे व्यवहार पञ्चीकृतिर्मुधा पञ्चीकरणस्य कुत्राप्यश्रवणादिति । तत्रेदं वक्तव्यं पञ्चीकरणस्य व्यवहारमार्गसिद्धत्वादप्रामाण्यं किंवाश्रुतत्वादाहोस्वि रणश्रुतिविरोधादिति । आद्येऽष्टकाकरणादीनां शिष्टव्यवहाराणामप्र त्वापत्तिः । द्वितीयेऽपि किं साक्षाच्छ्रवणाभावो हेतुरुत श्रु भावोऽपि । नाद्यः साक्षादश्रुतस्य प्रत्याख्याने परमापूर्वादीनामपि नप्रसङ्गात् । न द्वितीयः श्रुतार्थापत्तेर्विद्यमानत्वात् । तथाहि तेजःप्रभृतीनां त्रयाणां सृष्टिश्रुतौ तावच्छ्रुत्यन्तरप्रसिद्धाकाशवायु संहरणीयत्वम् । वियदधिकरणे तेजोधिकरणे च निर्धारितमेत सर्वविज्ञानप्रतिज्ञाहान्यादिभिर्हेतुभिः । तथा च श्रुत्यन्तरे पञ्चानां भूतानां सृष्टिं प्रक्रम्य तेषां सूक्ष्मतयाव्यवहार्याणां व्यव त्रिवृत्करणं श्रुवन्ती श्रुतिः पञ्चीकरणाभिप्राया चेन्न स्यात्तदा वायव सूक्ष्मत्वानिवृत्तेरव्यवहार्यतापत्तौ सृष्टानां भूतानां व्यवहाराय त्रिवृ

१. *Chhā.* 6. 3. 2. २. युक्तिदुष्ट° N. युक्तिरुध° M. युक्ति
३. See Notes. ४. *Brahmasūtra* 2. 3. 1-7. ५. *Idem.* 2

त्यानुपपत्तिः केन वार्यते । न च वाय्वाकाशयोर्व्यवहार एव नास्तीति ह्यत्यं महान्वायुर्महन्नभ इति व्यवहारस्य सर्वजनीनत्वात् । ननु श्रुत्युक्तत्वानां स्येव त्रिवृत्करणं स्वीक्रियते न व्यवहारायेति चेन्न त्रिवृत्करणवाक्ये मिदं सम्बन्धिनः फलस्याभावात्फलवदात्मैक्यज्ञानार्थवादत्वे यथासृष्टिन्यायं ति । वृत्करणं युक्तमर्द्धजरतीयस्यान्याय्यत्वात् ॥

ननु शाखान्तरे भूतद्वयसृष्टेः श्रुतत्वात्तत्परित्यागानुपपत्तेश्छान्दोग्यतैत्तिरीयादिश्रुत्योर्विरोधपरिहारायोपसंहारः क्रियते न तथा पञ्चीकरणं क्वचिच्छ्रुतमस्ति येन तन्न्यायोऽनुसरणीयः स्यादिति चेत्सत्यम् । तथापि न्यायानुकरणं युक्तम् । यथा त्रिसर्गश्रुतौ सृष्टानां भूतानां स्फुटतरव्यवहाररूपनामव्याकरणोपायतया त्रिवृत्करणं श्रुतं तद्वद्भूतपञ्चकसर्गश्रुतावपि तथा रूपव्याकरणोपायः कश्चिदीश्वरस्येक्षितुर्युक्तः । स चोपायविशेषस्तस्यैवेस्य भूतयोनेः शाखान्तरे त्रिवृत्करणरूपः श्रुतस्तत्परित्यागेनान्यस्य कल्पनां प्रमाणाभावात्तस्यैव पञ्चसर्गश्रुतावप्युपसंहारे प्राप्ते तस्य पञ्चीकरत्वमन्तरेण पञ्चानां भूतानां स्फुटतरव्यवहारोपायतानुपपत्तेर्युक्तं त्रिवृत्कवाक्यस्य पञ्चीकरणोपलक्षणत्वमित्येतेन चरमः पक्षः प्रतिक्षिप्तस्त्रिवृत्करणः पञ्चीकरणार्थत्वनिरूपणे कृते तेन पञ्चीकरणस्य विरोधासम्भवात् । अभिप्रायश्चैवं वर्णितो विद्वत्तमाचार्यैः । "आकाशस्य सर्वावकाशतया व्यतिरेकाद्वायोश्च सर्वचेष्टाहेतुत्वेन सर्वाविनाभूतत्वात्तयोस्तेजःप्रभृतिष्वमांवं सिद्धवत्कृत्य त्रिवृत्करणं प्रयोगसौकर्यार्थं श्रुतिर्वर्णयाम्बभूव" इति । प्रादस्ति पञ्चीकरणं प्रामाणिकमित्यलमतिनिर्बन्धेन ॥

ननु पृथिव्यादीनां भूतानां चेत्सर्वभूतात्मकत्वं तथा सति व्यवहारर्यप्रसङ्ग इत्याशङ्क्याह पञ्चानां इति । वैशेष्यात्विशेषभावात् भागायस्तद्वादो नभः पवनस्तेजो जलं पृथिवीत्यादिव्यपदेशो भवतीति तीयाध्यायेसमाप्त्यधिकरणे न्यायेन निर्णयः कृतस्तेन न्यायेनाकाशादौ व्यवहारासाङ्कर्यं सिध्यतीत्यभिप्रायः । इदानीं भूतानां पञ्चीकृतत्वे लिङ्ग तदानीमिति । तदानीं पञ्चीकरणानन्तरमाकाशे शब्दोऽभिव्यज्यते । टतयेति सर्वत्र योजनीयम् । एतदुक्तं भवति । आकाशादीनां पूर्वस्योत्तरोत्तरं प्रति कारणत्वेन स्वस्वकार्यापेक्षया व्यापकत्वात्कार्यांशलितत्वेऽपि न कार्यगतगुणाश्रयतयाप्यभिव्यक्तिः किन्तु स्वस्वगुणाश्रयव । तथा कार्याणां स्वकारणापेक्षयाल्पत्वात्तेषां कारणभागसम्मिश्रितानां रणगुणाश्रयतयापि भवत्यभिव्यक्तिरिति । तथा च लोकेऽनुभवः । प्रचण्ड-

१. See Notes. २. Cannot trace this. ३. *Brahmasūtra* 4. 20-22.

शब्दो वायुः । प्रजल्पति ज्वाला । नदी संक्षुभ्यति । स्फुटमानः क्रोशतीत्यादि । स्पर्शादीनां तेजःप्रभृतिषु सद्भावोऽविचाद एव। मनुभवो भ्रान्तिर्व्यवहारदशायां बाधादर्शनात् । तथा च प्रति अपि शब्दादयो गुणा यथायथं भूतान्तरेष्वप्युपलभ्यमाना भूत कृतत्वं गमयन्तीति ॥ १५ ॥

एवं भूतारोपं प्रपञ्च्य भौतिकारोपमाह एतेभ्य इति । भूरादयश्च कर्मज्ञानफलभोगस्थानविशेषा यथापाठक्रममुपर्युपरि वर्तमानाः धोऽधश्च पाठक्रमेण वर्तमाना अतलादयः सप्तेत्येवं चतुर्दश लो एव स्वावरणभूतलोकालोकपर्वततद्बाह्यपृथिवीतद्बाह्यसमुद्रैः सहित मित्युच्यते । अस्य च परिमाणं श्रुतौ सङ्कीर्तितं "द्वात्रिंशतं वै दे न्ययं लोकस्तं समन्तं पृथिवी द्विस्तावत्पर्येति तां पृथिवीं द्वि पर्येति' इति । शरीराणां चातुर्विध्यं स्पष्टयति शरीराणि इति। क्रमं शरीराणि लक्षयति जरायुजानीत्यादिना ॥

ननु वैशेषिकाः प्रत्यक्षाप्रत्यक्षवृत्तेरप्रत्यक्षत्वात्पञ्चात्मकत्वं न यदन्तोऽप्रत्यक्षाभ्यां वाय्वाकाशाभ्यां सह पृथिव्यादिभिरा शरीराणामप्यप्रत्यक्षत्वप्रसङ्गान्न पाञ्चभौतिकं शरीरमित्याहुस्तत्क भूतेभ्यश्चतुर्विधभूतग्रामस्योत्पत्तिरुच्यत इति चेदत्राहुः । अस्ति सर्वेषामपि भूतानां कार्यसम्प्रतिपत्तिरवकाशव्यूहनपचनक्लेदन सर्वजनानुभवसिद्धत्वात् । अतस्तत्कारणतया पञ्चापि भूतान्युप सन्तीति स्थिते यदि तेषां भूतानां देहावयवत्वाभावो वृत्तिला स्यात्तदा तदुपगमानपगमाभ्यां देहस्यापचयोपचयौ न स्याता च तयोः सतोरुपचयापचयावतत्तन्तुपटयोरिवावयवावयवित्वमेव देहयोर्युक्तम् । पार्थिवे कार्येऽपार्थिवानां भूतानां वृत्तिलाभमात्रे गमापगमाभ्यां तस्योपचयापचयायोगात् । न हि वस्त्रस्यानार द्रव्यार्द्रीकृतस्य तदवस्थायामुपचयस्तदपगमे चापचयोऽस्ति तद योस्तदवस्थास्वदर्शनात् । तथाच जलदयोरपि पावकपवनोपगमे परिमाणान्यथात्वं न दृश्यते । तथा च यदि भस्मादाविव भूतान्तरस्य वृत्तिमात्रता स्यात्तर्हि भस्मादिदेहयोरविशेषेण सत्त्वमसत्त्वं वा तुल्यवत्प्रसज्येतादृष्टवदात्मनः संयोगतज्जन्यप्रयत्ना रस्याप्युभयत्र समानस्यापादयितुं शक्यत्वात् । न च प्रत्यक्षा शरीरस्याप्रत्यक्षत्वं शङ्कनीयं प्रत्यक्षाप्रत्यक्षावयववृत्तीनामवयविनाम प्रसङ्गात् । न च स्पर्शशून्यत्वादेकद्रव्यत्वाच्चाकाशस्यारम्भकत्वानु

१. *Brih.* 3. 3. 2. २. See Notes. ३. °मृदो° P.

च्यमारम्भवादस्यानङ्गीकारादेकस्यापि दुग्धावयविनो दध्यारम्भकत्वदर्शनात्। न च दुग्धावयवैरिव दध्यारभ्यत इति वाच्यं तथा सति दधिदुग्धगन्धरसादिवैषम्यं न स्याद्दुग्धस्येव सतः परिणामो दधीत्यभ्युपगमे गन्धादिवैषम्यम्। स्पर्शशून्यमपि द्रव्यं यथा गुणारम्भकं दृष्टं तथा द्रव्यारम्भकमप्यस्तु । श्रुतिरपि शरीरस्य सङ्कीर्णद्रव्यारब्धतां श्रावयति "अन्नमशितं त्रेधा विधीयत" इत्यादौ। याज्ञवल्क्योऽप्याह

"पञ्च धातून्स्वयं षष्ठ आदत्ते युगपत्प्रभुः"। इति।

वस्तुतस्तु पञ्चानां भूतानां पञ्चात्मकत्वस्य दर्शितत्वादारम्भवादस्य निरातत्वाच्च नात्रोदयनाद्युक्तदोषशङ्कावकाशोऽपीति गमयितव्यं तस्मात्सिद्धं शरीरं पाञ्चभौतिकमिति ॥ १६ ॥

अत्रापि इति स्पष्टार्थः। स्थूलसमष्ट्युपहितस्य चैतन्यस्य व्यपदेशभेदामाह एतत्समष्ट्युपहितं इति। चकारात्पुरुषादिशब्दग्रहः । उच्यते । "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" "सैषा विराडित्यादौ" "पुरुष एवेदं" इत्यादिश्रुतिभिरिति शेषः । तत्र हेतूनाह सर्वनरेति। सर्वशब्दो विश्वपदपर्यायः । विश्वनराभिमानित्वाद्वैश्वानरः । विविधं राजमानत्वाद्विराट् । चकारात्पूर्णत्वात्पुरुष इति च द्रष्टव्यम् । उपहितस्य व्यपदेशानुक्त्वोपाधेरपि तानाह अस्यैषेति । "अन्नं वै विराट्" इति श्रुतेरन्नविकारत्वम्। स्थूलभोगोऽतिस्पष्टो भोगः । एवं समष्टिस्थूलतदुपहितचैतन्ययोर्व्यपदेशभेदं दर्शयित्वा व्यष्टिस्थूलतदुपहितयोरपि तमाह अस्त्यव्यष्टीति। व्यष्टिस्थूलशरीरोपहितस्य विश्वशब्दवाच्यत्वे हेतुमाह सूक्ष्मेति । सूक्ष्मशरीरं कारणशरीरं तदपरित्यज्य स्थूलशरीरादौ तदपेक्षया स्थूलशरीरं लिङ्गशरीरं तद्वादियंस्य परमस्थूलशरीरस्येति तद्गुणसंविज्ञानो बहुव्रीहिस्तस्मिन्प्रवेष्टृत्वात्। तथा हि जीवस्य त्रय उपाधयः । सुषुप्त्यादौ ...च्छादिसंस्कारोपरञ्जितमज्ञानमात्रमुपाधिः। स्वप्ने जाग्रद्वासनामयं लिङ्गशरीरमुपाधिः । जाग्रदवस्थायां तु सूक्ष्मशरीरसंसृष्टस्थूलशरीरमुपाधिः । तथा च पूर्वपूर्वोपाधिविशिष्टस्यैवोत्तरोत्तरोपाधिप्रवेशात्सर्वशरीरप्रवेष्टृत्वेन स्थूलभोगायतनाभिमानिनो विश्व इति संज्ञेति । यद्वा सूक्ष्मशरीरं लिङ्गशरीरं तदपरित्यज्य स्थूलशरीरं विराड्व्यष्टिस्तदादियांसां चक्षुरादिवृत्तीनां तद्विषयाकाराणां च तत्प्रवेष्टृत्वादिति हेतुयोजना। स्थूलशरीरमपरित्यज्येति

---

१. *Pañchadas'i* xiii. 6, 7. See Notes. २. *Chhā.* 6. 5. 1. ३. *Yājnyavalkyasmṛiti* 3. 72. ४. Udayanāchārya, a Naiyāyika. ५. *Chhā.* 5. 18. 1. ६ *Idem.* 4. 3. 8. ७. *S'vet.* 3. 15. ८. *Tait. Brāhmaṇa* 1. 6. 3. 4. ( omits वै ). ९. See Notes.

क्वचित्पाठे स्थूलशरीरे वर्तमानस्यैव सूक्ष्मशरीरकारणशरीरयो
दिति हेत्वर्थोऽनुसन्धेयः । सर्वथा विश्वशरीरवर्तित्वाद्विश्व इत्युक्तं
भावः । अस्यापि इति पूर्ववत् । एपेति व्यष्टिरुच्यते । पूर्व
नरयोरपि जाग्रत्स्थित्यवस्थापन्नं भोगविशेषं सप्रकारं प्रपञ्चयति
दिना । दिगादिपञ्चदेवतानियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन
शब्दादिगन्धान्तान्स्थूलविषयाननुभवत इति प्रत्येकं योजनीयम्।
देवतापञ्चकनियन्त्रितेन वागादिपञ्चकेन वचनाद्यानन्दान्तां
देवताचतुष्टयनियन्त्रितेन मन आदिचतुष्केण सङ्कल्पादिचैतन्यं
सर्वानेतानिति । यथायथं यथोक्तक्रमानुरोधेन सर्वानेतान्स्थूलभो
ननुभवत इत्यर्थः । अत्रापि प्रमाणमाह जागरित० इति ।
"स्थूलभुग्वैश्वानर" इति वाक्यशेषग्रहः ॥

इदमत्र बोद्धव्यम् । जाग्रदवस्थायां हि प्रमातृप्रमाण
भवन्ति तत्र प्रमाणैर्योऽर्थं प्रमिणोति स प्रमाता येन प्रमिणोति
यत्प्रमीयते तत्प्रमेयमिति सर्वतन्त्रसिद्धान्तः । तत्र यः प्रमाता
स विषयं प्रमिण्वन् कया प्रत्यासत्त्या प्रमिणोतीति विचारणीयम्।
इन्द्रियविषयाणां क्रमेण संयोगपरम्परयेति चेन्न विषयसंयुक्त
संयोगपरम्परया युगपत्सर्वावभासप्रसङ्गात् । यावदिन्द्रियसम्ब
हि भासत इति नातिप्रसङ्ग इति चेन्नेन्द्रियसन्निकर्षस्यापीयत्तान
इन्द्रियसन्निकर्षानन्तरं योऽर्थः स्फुरति तावन्मात्रं सन्निकृष्यत
न्द्रियसन्निकर्षस्येयत्तावधारणात्स्फुरणस्य विषयनियमस्तस्मिन्
कर्षेयत्तावधारणमिति परस्पराश्रयात् । किञ्चोक्तसन्निकर्षस्य
क्षणिकत्वात्तदनन्तरं तस्यावस्थाने कल्पकाभावाच्च ज्ञानस्य वि
सम्बन्धः स्यात् । तथा च मयेदं विदितमिति स्वात्मनि सम्बन्धा
भावप्रसङ्गः । न चाश्रयद्वारा सम्बन्ध इति वाच्यं ज्ञानस्य
श्रयत्वे युगपत्सर्वविषयसम्बन्धात्सर्वावभासप्रसङ्गः । देहावच्छिन्न
श्रितत्वे देहस्य बाह्यविषयासम्बन्धान्न बाह्यं किञ्चिदपि भायात्
सम्बन्धाभावेऽपि ज्ञानज्ञेययोरुद्दिष्टे विषये ज्ञानमतिशयं जनयति
वस्थेति चेन्नानुद्दिष्टेष्वपि दुर्गन्धादिषु ज्ञानकृतातिशयदर्शनात्
शात्किञ्चिदेव भासत इति चेन्न तस्य दृष्टसामग्रीसम्पादक
सिद्धत्वादगतिकत्वाच्च । तस्मान्न किञ्चिदेतत् । अतो वक्तव्या
विषयग्रहणव्यवहारे व्यवस्थेति । तदुच्यते । न तावदस्मत

१. So NQ; चेत्या° MR; चित्ता° P. २. *Māṇḍū* 3. ३.
करणसिद्धान्तन्याय in *Maxims* iii.

र्गो जीवस्य सर्वगतत्वासर्वगतत्वपक्षयोरप्यन्तःकरणकृता व्यवस्था सम्भ-
वति । तथाह्यपरिच्छिन्नपक्षे तावदन्तःकरणमेव मनोबुद्ध्यादिशब्दवाच्यं
र्गातृत्वादिव्यवहारापादकम् । यतोऽविद्यावृततया सर्वत्राप्रकाशमानमप्या-
चैतन्यमन्तःकरणसंसृष्टं सदवभासते दर्पणद्रव्यसंसृष्टरविरश्मिवत् । तथा-
ःकरणमदृष्टादिसहायं विषयसंवेदनवेलायां तडागकुल्याक्षेत्रगतोदकप्रवाह-
हतद्वाह्यदेशतद्गतविषयानभिव्याप्यावतिष्ठते । तत्र च तिसृष्वप्यवस्था-
त्मचैतन्यं तदात्मनैवाभिव्यज्यते । तत्र देहमध्यान्तःकरणभागावच्छिन्नं
चैतन्यं प्रमातृसंज्ञां लभते । देहविषययोर्मध्ये दीर्घप्रभाकारेणेन्द्रियद्वारा
र्गतान्तःकरणभागावच्छिन्नं प्रमाणसंज्ञाम् । विषयमभिव्याप्य विषयाकार-
वस्थितान्तःकरणभागावच्छिन्नं प्रमेयसंज्ञाम् । इति प्रमातृप्रमाणप्रमेय-
वस्थोपपत्तिः । एवमभ्युपगमे येन विषयेण सहेन्द्रियस्य सन्निकर्षो दूरे
न्तिके वावतिष्ठमानेन तत्रैव तदाकारमेवान्तःकरणं परिणमते नान्यत्र
न्याकारमिति च लभ्यते । तदनुरक्तचैतन्यात्मनश्चैकत्वान्मयेदं विदितमिति
न्धावभासश्चोपपद्यते नान्यथा । परिच्छिन्नात्मपक्षेऽपि जीवस्योपाध्यन्तः-
णस्य पूर्वोक्तप्रकारेणावस्थाभेदसम्भवे उपाध्यनुगामित्वादुपहितस्य स्वो-
ध्यन्तःकरणं यद्यदात्मनावतिष्ठते तत्तदात्मना प्रत्यगात्मचैतन्यमप्यवभास-
नं ग्राह्यग्रहणग्राहकभेदव्यवस्थामनुभवत्यग्निरिवायःपिण्डादिसमारूढ इत्य-
घम् । न चेयं कल्पना तार्किककल्पनावत्पुरुषबुद्ध्युत्प्रेक्षामूला किन्तु
तिमूला । तथा च श्रुतयः । "स समानः सन्नुभौ लोकावनुसञ्चरति
ध्यायतीव लेलायतीव सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति" "नवद्वारे
देही हंसो लेलायते बहिः" "आसीनो दूरं व्रजति" "मनोमयो
ज्ञानमय" इत्यादयः । उक्तं च भगवत्पादैः सर्वश्रुत्यर्थसङ्ग्रहे दक्षिणा-
र्तिस्तोत्रे ॥

"नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जग-
त्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये" ॥

युक्तिरपि मनसो बाह्यविषयदेशगमनाभावे इन्द्रियसन्निकर्षपरम्परया
न्तरे च विषयाकारतास्वीकारे बहिरेतावति दूरेऽयं विषयो मयोपलब्ध

१. See Notes. २. *Brih.* 4. 3. 7. ३. This is the reading of the Mādhyandina recension. The Kāṇva has स हि. ४. *S'vet.* 3. 18. ५. *Katha.* 2. 21. ६. *Brih.* 4. 4. 5. ७. Verse 4. See ८. छिद्रघटप्रदीपन्याय in *Maxims* ii ( 2nd edn. ).

इति प्रतिसन्धानं न स्यात् । अनेकायामविस्तीर्णदेशतद्विषयस्य अ
भावस्वान्तर्हृदयेऽनुपपत्तेः । न च स्वप्नवदुपपद्यत इति वाच्यं ।
मायामयस्योक्तत्वात् । जाग्रदपि मायामयमेवेति चेत्सत्यं तथापि
व्यवहारभेदसिद्धये तयोः कियदप्यस्ति वैषम्यं सति प्रमातरि बाधिति
बाध्यमानत्वाभिमानादिलक्षणम् । नन्वखण्डब्रह्माकारा वृत्तिरन्तःकरणे
इति चेद्बाढं सा हि देहाद्यावरणमुपमर्दयन्ती जायते बाह्ये ना
नैवमिति वैषम्यं स्यात् । किञ्च यदि विषयेन्द्रियसम्बन्धमात्रम्
विषयाकारताहेतुस्तदा दूरवर्तिविषयगतपरिमाणरूपसंख्यादीनां
काराकारितेऽन्तःकरणे यथावदवभासप्रसङ्गः । न च दूरत्व म
नावभासत इति वाच्यं तस्येन्द्रियसम्बन्धमात्रे प्रतिबन्धकत्वाभावात्
तथापीन्द्रियसंसृष्टाकारता मनस इति स्थिते कथं दूरस्थविषया
कारता मनसो न भवेदिति चेन्मैवं मम तु मनसो बहिर्स्वातन्त्र्य
चयवैरवयविभिर्वा चक्षुःसन्निकर्षस्तावन्मात्राकारमेव मनः परि
क्ल्प्यते । तव तु पदार्थसन्निकृष्टेन्द्रिये सति तद्गतभूयस्त्वाल्पत्व
विशेषानादरेऽप्यन्तस्तदाकारवृत्त्युदयोपपत्तेर्विपर्ययस्तादेरपि स्फुरणं सम
तेति वैषम्यात्तस्मादस्ति प्रत्यक्षव्यवहारे बाह्यमनोवृत्तिविषयाकारत्
तम् । परोक्षव्यवहारे तु विशिष्टशब्दलिङ्गादिबलनिबन्धना
धीरन्तरेव समुन्मिषति विषयसत्तामात्रस्यैव तत्र स्फुरणात्
स्फुरणाच्चेति दिक् । तथा च स्वप्नावस्थायामात्मा बुद्ध्युपाधिः
हेतुकर्मक्षये जागरितमागच्छन्पूर्वगृहीतेषु करणेषु पुनः स्वस्व
तथैव युक्त्वा प्रसारितेषु सत्सु स्वयं तद्वृत्त्यनुगतस्तत्तद्गोलकादि
न्स्वोपाध्यन्तःकरणेन्द्रियसचिवस्तत्तदिन्द्रियविषयाननुमेयांश्च
वहारिकान्पदार्थाननुभवति । तदिदमस्य जागरितम् । तदुक्तं "
पलब्धिर्जागरितं" इति । अयमेव विश्ववैश्वानरात्मनः स्थूल
अत्राप्यनयोः स्थूल इत्यादि पूर्ववत् । स्थूलप्रपञ्चाध्यासं सा
दितमुपसंहरति एवमिति ॥ १७ ॥

उक्तं प्रपञ्चत्रयं तदुपहितचैतन्यत्रयं च पूर्ववत्सदृष्टान्तमेकी
यति एषां इत्यारभ्य आभ्यां इत्यतः प्राक्तनेन ग्रन्थेन ।
ग्रन्थः । फलितमाह आभ्यामिति । तत्पदार्थविषयमध्यारोप
एवमिति ॥ १८ ॥

१. See परतन्त्रं बहिर्मनः in *Maxims* iii. So PQR; b
२. तद्गतविषया°. ३. S'ankara's *Pañchīkaraṇa;* see Notes

अधुना स्वम्पदार्थविषयमध्यारोपं बहुवादिमतोपन्यासेन दर्शयति इदानीं ति । तत्रारुन्धतीप्रदर्शनन्यायेन मुञ्जादिषीकाग्रहणन्यायेन वा प्रत्यञ्चं हादिविविक्तं चिदेकतानमात्मानं दिदर्शयिपुरतिमूढमतेर्मतं तावदाह तिप्राकृत इति । अतिप्राकृतस्तु पुत्र आत्मेति वदतीत्यन्वयः । कुत अपेक्षायां श्रुतियुक्त्यनुभवाभासान् क्रमेण प्रमाणयति आत्मा वा इत्या- ना । स्वस्मिन्निवेति युक्तिकीर्तनं लोके हि पुत्रिण इष्टमिदं स्वाद्यादि त्मवचनेनापि पुत्रेषु समर्पयन्तस्तेषु परमप्रेम कुर्वन्तस्तेषामात्मत्वमेव कटयन्तीति भावः । पुत्रे नष्ट इत्याद्यनुभवोक्तिः ॥

मतान्तरमाह चार्वाक इति । स्थूलशरीरमात्मेति वदन्तीत्यन्वयः । त्रापि श्रुत्यादिप्रमाणं वदन्प्रागुपन्यस्तपक्षे दूषणं सूचयति स वा एष त्यादिना । एवमेवोत्तरेष्वपि पक्षेषु प्रमाणादिग्रन्थोत्थानं द्रष्टव्यम् । स य ओषधीनां रेतोरूपेण परिणतानां परिणामः प्रसिद्ध एव प्रत्यक्षः रूपः शिरःपाण्याद्यात्मकोऽन्नरसमयोऽन्नरसविकारोऽन्नरसेनैवोपचीयमानत्वा- ति श्रुतेरर्थः । इह पुरुषशब्दस्य लोक आत्मनि प्रयोगात्तस्य च श्रुतावप्य- समये देहे प्रयुक्तत्वाद्देह आत्मेति गम्यत इत्यभिप्रायः । परमप्रेमगोचरत्व- त्मन्येव विश्रान्तमितरस्य सर्वस्यापि तच्छेषत्वेनैव प्रियत्वात् । "तदे- प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा" इति तेश्च । सा च प्रीतिः पुत्रादपि देहेऽधिकतरा निरतिशया च दृष्टा । न्यथा दह्यमाने गृहादौ हन्तृषु चोपस्थितेषु पुत्रं परित्यज्य स्वस्य पलाय- नानुपपत्तेरिति युक्त्यर्थः । अहम्प्रत्यय आत्मानमवगाहत इति सर्ववादि- समविवादः । स च कृशोऽहमित्यादिना देहावलम्बनोऽनुभूयतेऽतो देह यात्मेत्यर्थः ॥

लोकायतानां चार्वाकविशेषाणां मतभेदानाह अपरश्चार्वाक इत्यादिना न्द्रस्त्वित्यतः प्राक्तनेन ग्रन्थेन । अन्वयादि पूर्ववत् । प्राणानां वागादीनां जापतिगमनं तं प्रति प्रश्नकरणं चाचेतनत्वे न सम्भवतीत्यनुपपत्त्या तेषां तन्यमवश्यम्भावीति श्रुतार्थापत्तिरिह मानं न श्रुतिरेवेति द्रष्टव्यम् । न्द्रियाणामभावे उपरमे स्वापादौ देहचलनस्य चैतन्यकार्यस्यादर्शनात्तद- परमे च तद्दर्शनादन्वयव्यतिरेकाभ्यामिन्द्रियाण्येव चेतनानि न देह इति श्रीयते । न च तेषां करणत्वेनापि ज्ञानान्वयव्यतिरेकोपपत्तौ तदाश्रयत्व- ल्पनमयुक्तमिति वाच्यमाश्रयसिद्ध्युत्तरकालीनत्वात्करणत्वकल्पनायास्तस्य श्रयत्वस्य देहेऽप्यसिद्धेर्नान्यथोपपत्तिः । अत इन्द्रियाण्येवात्मानः

१. See Notes. २. Ditto. ३. *Bṛih.* 1. 4. 8.

कोणत्वादेश्चाहमालम्बनत्वमयाधितम् । देहे तु ममप्रत्ययबाधितत्वात्म
मिति भावः ॥

मुख्यप्राणात्मवादिमतमुत्थापयति अपर इति । अन्योऽभ्य
इति योजना । स चान्नमयादन्तरोऽभ्यन्तर इत्यर्थः । प्राणाभावे
स्वस्थितिनिबन्धनान्नाद्यलाभेन कृशीभावे सतीन्द्रियाणां विद्यमा
स्वस्वविषये प्रवृत्त्यदर्शनात्सति च तस्मिन्पुष्टे तद्दर्शनात्प्राण
न प्राणाधीनस्थितिकानीन्द्रियाणीति । इन्द्रियाणां चैतन्यान्वय
करणत्वेनाप्युपपद्यत एव । तेषामेव कर्तृत्वे करणाभावप्रसङ्गः
कस्मिञ्छरीरे इन्द्रियाणां सम्भूय भोक्तृत्वं प्रत्येकं वा । द्वितीयेऽपि
क्रमेण वा । नाद्यः । रूपादौ चक्षुरादिभोग्ये जिह्वादीनां भोक्तृत्वा
न हि संभूयेन्द्रियाण्येकं कार्यं निर्वर्तयन्ति तेषां प्रतिनियत
विषयभेदस्यान्वयव्यतिरेकसिद्धत्वात् । न द्वितीयः । उक्तेन प्रकारे
पद्यासम्भवात् । प्रत्येकं क्रमेण भोक्तृणीन्द्रियाणीति तृतीयेऽपि
प्रत्येकं स्वातन्त्र्ये कदाचिदनैकमत्ये सति विरुद्धादिक्रियैस्तैरधिष्ठि
विदीर्येत । अस्वातन्त्र्ये यदधीनत्वं तेषां तस्यैवात्मत्वं युक्तं
न्यायस्य शरीरैक्येऽनुपपत्तेः । प्राण एव तु मुख्यः सर्वेषामिन्द्रिया
इति युक्तमतः स एवात्मा स्वापप्रबोधयोरविच्छिन्नस्वभावः । प्रत्ये
याणामात्मत्वेऽन्यदृष्टेऽन्यस्मरणानुपपत्तेरिह च यश्चक्षुषा रूपम
इदानीं गन्धं जिघ्रामीति प्रत्यभिज्ञा दृश्यते । तस्मादिन्द्रिया
इति भावः । अशनायापिपासयोश्च प्राणधर्मत्वं प्रसिद्धमन्नपान
प्राणविच्छेददर्शनात् । तादृग्धर्मकश्च प्राणोऽहम्प्रत्ययविषय इति
आत्मेत्यनुभव इत्यर्थः ॥

मनआत्मवादिमतमुत्थापयति अन्यस्तु इति । प्राणमयाद
आत्मेति यावत् । मनसि सुप्ते विलीने प्राणादेरभावाद्धृतिवच्छ्वास
दर्शनस्य द्रष्टृदृष्टयध्यारोपितत्वादिन्द्रियाभावेऽपि स्वप्नस्मृत्योर्मनसि
पत्तेर्मन एवात्मेत्यर्थः । यद्वा प्राणादेरभावदिति तद्व्यापारोपरमे
तस्याभावमुपचर्येदमुच्यते । तथा चेन्द्रियेषूपसंहृतव्यापारेषु प्राणे
संहृतप्राणनापाननेतरवृत्तौ मनसैव केवलेन स्वप्नादेरुपलम्भान्मन
त्यर्थः । मनसश्च सङ्कल्पादिधर्मवत्त्वं प्रसिद्धमित्यनुभवोक्तिः स्पष्टार्था ।

योगाचारमतमुत्थापयति बौद्धस्तु इति । मनोमयादन्योऽन्तरो

१. कारण° NP. २. Contrast with this *Nyāyamañjarī*, line 8:—"संभूय कारकैः कार्यमारभ्यत इति न्यायात्". ३. See
४. See Notes.

त्मा विज्ञानमयः क्षणिकविज्ञानमय इति बौद्धाभिप्रायः । बुद्धिः क्षणिक-विज्ञानमात्मेत्यत्रानुभवमाह अहं कर्तेति । मनस एव कर्तृत्वं स्यात्किं विज्ञानेनेत्याशङ्क्य मनसः करणपक्षपातित्वान्न कर्त्रनुभवगोचरत्वमित्यभिप्रेत्य युक्तिमाह कर्तुरभाव इति । मनसः कर्तृत्वे सर्वेन्द्रियाणां स्वस्वविषयैर्युग-त्सम्बन्धे युगपज्ज्ञानोदयप्रसङ्गः कर्तुर्मनसः सर्वैरिन्द्रियैरधिष्ठातृत्वेन युगप-त्सन्निहितत्वादपेक्षणीयान्तरानभ्युपगमाच्च । न चैवं दृश्यते तस्मान्मनसो-न्यः कर्ता । मनस्तु विज्ञानक्रमहेतुः साधारणं करणमेवेत्यर्थः । एवं द्वाक्यवादानुपन्यस्य विज्ञानमयकोशपर्यन्तमात्मनः प्रत्यक्त्वमवगमितम् । च क्षणिकविज्ञानस्यैवात्मत्वमध्यवसातुं शक्यं ज्ञानेच्छाप्रयत्नसंस्कार-स्मृतीनामेकाश्रयत्वनियमात्तेषां च क्रमिकत्वात्क्षणिकविज्ञानाश्रयत्वानुपपत्तेः । ज्ञानादीनामेकाश्रयत्वाभावे तु वस्तुनि दृष्टे पूर्वदृष्टसजातीयत्वादिलिङ्ग-दर्शनादिष्टसाधनताद्यनुमानपूर्वकं प्रवृत्त्याद्यभावः प्रसज्येत । अन्यदृष्टेऽन्य-स्मरणानुपपत्तेः । उक्तं च न्यायकुसमाञ्जलौ

"नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे" इति ।

क्षणिकपक्षे बन्धमोक्षयोरपि वैयधिकरण्यमित्यादिबहुदुष्टत्वादनादरणीयः क्षणिकविज्ञानात्मपक्ष इत्यभिप्रेत्य वेदवादिपक्षमाश्रित्य विज्ञानादप्यन्तर-मात्मानं निर्दिधारयिषुस्तावत्तत्रापि स्थूलदर्शिमतभेदमाह प्राभाकर० इत्यादिना । प्राभाकरतार्किकावज्ञानमात्मेति वदत इत्यन्वयः । अज्ञानं क्षणिकविज्ञानादन्यत्तदधिकरणं द्रव्यरूपमात्मतत्त्वमिति वदत इत्यर्थः । विज्ञानमयादप्यन्तरे आत्मनि श्रुतिं प्रमाणयति अन्योऽन्तर आत्मेति । विज्ञानमयादानन्दमयोऽन्य इति यावत् । न चानन्दमयः परमात्मेति त्वम्पदार्थमध्ये न तस्योदाहरणं युक्तमिति वाच्यमन्नमयादिविकारप्रायपठित-त्वाद्यदृश्रुतिविरोधात्प्रियशिरस्त्वादिवचनविरोधाच्च । एतच्च भाष्यकारैः "आनन्दमयोऽभ्यासात्" इत्यस्मिन्नधिकरणे निर्णीतम् । तस्मायुक्तमेव त्वम्पदार्थमध्य आनन्दमयश्रुत्युदाहरणमिति द्रष्टव्यम् । सुषुप्तौ बुद्ध्यादीनां ज्ञानसुखदुःखेच्छादीनामज्ञाने ज्ञानभिन्न आत्मनि लयदर्शनादभावदर्शनाच्च ज्ञानमात्मेति युक्तिमाह बुद्ध्यादीनामिति । सर्वज्ञानाभावस्य सुषुप्तौ सम्प्रति-पत्त्वात्सुषुप्तिजागरितयोरप्यात्मैक्यप्रत्यभिज्ञानाच्च ज्ञानमात्मा किन्तु तदन्य

१. *Stavaka* 1. 15. *Maxims* ii ( 2nd edn. ). २. See *Tait.* 2. ( "तस्य प्रियमेव शिरः" ), and bhāṣya on the sūtra quoted below. ३. *Brahmasūtra* 1. 1. 12.

एवेति भावः। अनुभवमाह अहमज्ञ इति। अहमज्ञो ज्ञानहीनो
ज्ञानवानित्यनुभवोऽपि ज्ञानात्मनोर्धर्मधर्मिभावेन भेदं द्रढयतीत्
मतान्तरमाह भाट्ट इति। भाट्टस्त्वज्ञानोपहितं चैतन्यमात्मे
त्यन्वयः। अज्ञानोपहितत्वमज्ञानसंवलितत्वं ज्ञानाज्ञानरूपत्वं
बोधरूपत्वमिति यावत्। तत्र माण्डूक्यश्रुतिं प्रमाणयति प्रज्ञान
प्रज्ञानघनः प्रज्ञानैकरसः। एवकारेण रसान्तरसम्बन्धं वारयति।
मय इत्यानन्दप्रचुरो नानन्दविकारः। प्राचुर्यार्थे मयडन्तनिर्देशेन
स्वभावतापि द्रव्यांशकृतात्मनि गम्यत इति भावः। युक्तिमाह सु
सुषुप्तौ प्रकाशाभावे सुषुप्तिरसाक्षिकेति सुखमहमस्वाप्समित्यु
मर्शो न स्यान्न तदेन्द्रियमनसां व्यापारोऽस्ति येन तज्जन्यज्ञानेना
मर्शः स्यात्। नाप्यविद्या प्रकाशिका जडत्वात्। परिशेषादात्म
प्रकाशक इति प्रकाशसद्भावसिद्धिः। न किञ्चिदवेदिषमिति
दात्मन्येव सुषुप्तावशेषविज्ञानाभाववत्त्वमपि कल्प्यतेऽतस्तत्राप्रका
शश्चास्तीति भावः। ननु सुषुप्तावेवात्मनो ज्ञानाज्ञानरूपत्वं
इत्याशङ्कामनुभवाभिनयेन प्रत्याचष्टे मामहमिति। अहमित्या
भासमानेऽपि मां न जानामीत्यनुपसंहृतविशेषस्य तस्यैव
तस्मिन्नेव ज्ञाने भासत इत्यवस्थान्तरेऽपि द्व्यात्मक आत्मेत्य
ज्ञानस्यात्मधर्मत्वेऽपि न ततोऽत्यन्तभेदस्तादात्म्याङ्गीकारात्।
च समवायिभ्यां सह सम्बद्धस्यासम्बद्धत्वविकल्पासहत्वेनाप्रा
दिति भावः॥

माध्यमिकमतमुत्थापयति अपरो बौद्ध इति। इदं नाम
जगदग्रे सृष्टेः प्राक्कालेऽसच्छून्यमेवासीदिति बौद्धाभिप्रायेण
युक्तिमाह सुषुप्ताविति। तामेव स्वानुभवोपन्यासेन द्रढयति
अतः शून्यमात्मा सर्वाभावरूपो न द्रव्यबोधात्मक इति भावः॥

एवं प्रत्यगात्मत्वाधिष्ठानं मतभेदेनोपन्यस्तं दूषयितुमारभते
इति। तत्र तावत्पूर्वपूर्ववादिमतमुत्तरोत्तरवादिमतेन दूषितमिति।
शून्यपर्यन्तस्यानात्मत्वं तैरेव वादिभिः स्फुटीकृतमित्याह एतैरि
कथं वावदूकविवाददर्शनमात्रेण पुत्रादीनां शून्यपर्यन्तानामनात्म
धारयितुं शक्यते श्रुतियुक्त्यनुभवानां प्रत्येकमुपन्यस्तत्वादित्या
मुपन्यस्तास्तैः श्रुत्यादयः किन्तु ते सर्वे एवाभासाः पुत्रादिशून्य
रिक्तप्रत्यगात्मस्वरूपसमर्पकप्रबलश्रुतियुक्त्यनुभवविरोधादित्याह
न केवलं परस्परविगीतत्वादेव पुत्रादीनामनात्मत्वं किन्तु प्रबल

१. *Pā*. 5. 4. 21.

